( तो ) व्वारुण्युत्तरा भवति । व्वुरुणो ह् व्वा ऽअस्य प्प्रजा अगृह्णात्तत्प्र-त्यक्षं व्वरुणपाशात्प्प्रजाः प्प्रमुञ्चति मारुती द्दक्षिणाऽजामितायै न्वेव मारुती भवति जामि ह् कुर्य्याद्यदुभे व्वारुण्यौ स्यातामतो ह् व्वा ऽअस्य दक्षिणतो मरुतः प्प्रजा अजिघाᳬंसंस्तानेतेन भागेनाशमयंस्तस्मान्मा-रुती द्दक्षिणा ॥ १० ॥

---

सम्भूताः, यतः सम्भवन्ति—तत एवैतदुभयतो वरुणपाशात्–प्रजाः प्रमुञ्चति—इतश्चोर्ध्वाः, इतश्चा-वाचीः । तस्मादुभयत्र पयस्ये भवतः ॥ ९ ॥

वारुण्युत्तरा भवति । वरुणो ह वा अस्य प्रजा अगृह्णात्—तत्प्रत्यक्षं वरुणपाशात्प्रजाः प्रमुञ्चति । मारुती दक्षिणा । अजामितायै, न्वेव मारुती भवति । जामि ह कुर्यात्—यदुभे वारुण्यौ स्याताम् । अतो ह वा अस्य दक्षिणतो मरुतः प्रजा अजिघांसन्, तानेतेन भागेनाशमयत् । तस्मान्मारुती दक्षिणा ॥ १० ॥

---

यत्र ' अध्वर्युकर्तृकायामुत्तरस्यां वेद्यां प्रतिप्रस्थातृकर्तृकायां दक्षिणस्यां च द्वे ' पयस्ये ' हविषी ' भवतः ' वरुणपाशविमोचनानुकूल्यं पयस्यायाः प्रतिपादयति—पयसो वा इति । पुरा प्रजापतिना सृष्टाः ' प्रजाः ' तदीयस्तन्यरूपात् ' पयसः ' ' सम्भूताः ' वर्द्धिताः, इदानीमपि मानुषाः स्तन्यरूपात् पयस एव ' सम्भवन्ति ' वर्द्धन्ते । तत इत एवेति । अस्यार्थस्यानुवादः । ' तत एव ' सम्भूतिहेतोः ' पयसः ' कार-णात् ' उभयतः ' दक्षिणत उत्तरतश्च पार्श्वद्वयात्, प्रजानां वरुणपाशविमोचनं कृतवान् भवति ॥ ९ ॥

अध्वर्युकर्तृकायाः पयस्याया देवता विधाय स्तौति—वारुणीति । उत्तरस्यां वेद्यां या पयस्या, सा वरुण-देवताका कार्या । तत्प्रत्यक्षमिति । देवतान्तरयागेन वरुणपाशविमोचनं परोक्षम्, वरुणदेवताकेन [illegible] यागेन ' तत् ' पाशविमोचनं ' प्रत्यक्षम् ' एवेति वरुणदेवताकत्वं युक्ततरमित्यर्थः ॥

प्रतिप्रस्थातृकर्तृकायाः पयस्याया देवता विधाय स्तौति—मारुती दक्षिणेति । ' दक्षिणा ' दक्षिणस्यां वेद्यां क्रियमाणा पयस्या मरुद्देवताका भवेत् । अजामितायै इति । वरुणदेवतां परित्यज्य ' अस्याः ' पयस्याया यत् मरुल्लक्षणदेवतान्तरकरणम्, तत् जामितादोषराहित्याय भवति । व्यतिरेकेण तदेवाह—जामीति । ' यद् ' यदि ' उभे ' अपि दक्षिणोत्तरपयस्ये वरुणदेवताके स्याताम्, तदा प्रयुक्ताया एव देवतायाः पुनः प्रयोगो नवीकरणाभावादलसतारूपजामितादोषः स्यादित्यर्थः ॥

मारुतत्वे कारणान्तरमाह—अतो ह वा इति । ' अतः ' अस्माद्वरुणभागादपि हेतो दक्षिणा पयस्या मारुती कार्या । अस्य हि प्रजापतेः सम्बन्धिनीः प्रजाः पुरा दक्षिणतो दक्षिणदिग्भागेन मरुतः ' अजिघांसन् ' हन्तुमैच्छन्; तान् मरुतः प्रजापतिरेतेन पयस्यारूपेण भागेनाशमयत् शान्तिमनयत् । तस्माद् दक्षिणतः स्थितानां मरुतामुपशमनाय दक्षिणतः क्रियमाणैषा पयस्या मारुती कार्येत्यर्थः ॥ १० ॥

[illegible] प्रजापतिः प्रजाभ्यः करीरै-
[illegible] ११ ॥
[illegible] शं वै प्रजापतिः प्रजाभ्यः शमी-
[illegible] कुरुते ॥ १२ ॥
( तेऽथ ) अथ काय ऽएककपालः पुरोडाशो भवति । कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेन पुरोडाशेनाकुरुत कम्वेवैष ऽएतत्प्रजाभ्यः कायेनैककपालेन पुरोडाशेन कुरुते तस्मात्काय ऽएककपालः पुरोडाशो भवति १३
( न्यु ) अथ पूर्व्वेद्युः । ( २ ) अन्वाहार्यपचनेऽतुषानिव यवान्कृत्वा

---

तयोरुभयोरेव करीराण्यावपति । कं वै प्रजापतिः प्रजाभ्यः करीरैरकुरुत । कम्वेवैष एतत् प्रजाभ्यः कुरुते ॥ ११ ॥

तयोरुभयोरेव शमीपलाशान्यावपति । शं वै प्रजापतिः प्रजाभ्यः शमीपलाशैरकुरुत । शम्वेवैष एतत् प्रजाभ्यः कुरुते ॥ १२ ॥

[illegible] [प्र]जापतिः प्रजाभ्यः कायेनैककपालेन [illegible] पुरोडाशेन कुरुते । तस्मात् काय [illegible]

अथ पूर्वेद्युरन्वाहार्यपचनेऽतुषानिव यवान् कृत्वा, तानीषद्विोपतप्य, वैषां करम्भपात्राणि कुर्वन्ति, यावन्तो गृह्याः स्युः तावन्ति, एकेनातिरिक्तानि ॥ १४ ॥

---

करीराणामावपनं विधाय स्तौति–तयोरिति । तयोरुभयोः पयस्ययोः करीराणि प्रक्षिपेत् ( तै सं. २ । ४ । ९ । ४ ) मधुरा फलविशेषाः करीराणि तानि चोत्तरापथे प्रसिद्धानि । कं वा इत्यादि । 'करीरैः' इति करीरफलैः 'प्रजापतिः' 'प्रजाभ्यः' अस्माकं यस्मात् 'क' सुखम् 'अकुरुत' तस्मादिदानीमप्येवं यजमानस्तदावपनेन सुखमेव प्रजाभ्यः कुरुते ॥ ११ ॥

शमीपर्णानामावपनं विधत्ते–तयोरिति । 'शमीपलाशानि' शम्याः पर्णानीत्यर्थः । शं वा इत्यादि । 'शम्' इत्यव्ययं शान्तमित्यर्थः । स्पष्टमन्यत् । अत एवोक्तं कात्यायनेन–'उभयोः करीराण्यावपति शमीपलाशमिश्राणि'–इति ( का. श्रौ. सू. ५ । ११३ ) ॥ १२ ॥

अथान्तिमं हविर्विधत्ते–अथ काय इति । कः प्रजापतिर्देवता अस्य, "साऽस्य देवता"–इत्यणि "कस्येत्"–( पा. सू. ४ । २ । २४, २५ ) इति 'क'–शब्दस्येकारान्तादेशः । एतस्य हविषः प्रयोजनमाह–कं वा इति । सुखात्मको हि प्रजापतिः 'क'–शब्दवाच्यः । अतस्तद्देवताकेन यागेन सुखकरणमुपपन्नमिति भावः ॥ १३ ॥

करम्भपात्राणां निर्माणं विधत्ते–अथ पूर्वेद्युरिति । यस्मिन् दिवसे वरुणप्रघासयागः तत पूर्वेद्युः पूर्वे दिवसे ।

---

१–आगामिनि यागे अमावास्यायां संस्थितायां तद्दिवसात् पूर्वस्मिन् दिने ... [illegible] । पूर्वेद्युर्दक्षिणाग्नौ निस्तुषाञ्चयवानां करम्भपात्रकरणं निस्तुषग्रहणं ... [illegible] । यावन्तो यजमानगृह्याः एकाधिकानि । प्रजाभ्यो ... [illegible] । इति का. श्रौ. सू. ५।४७–५१।

तानीषद्दिवोपतप्य तेषां करम्भपात्राणि कुर्वन्ति यावन्तो गृह्याः स्युस्तावन्त्येकेनातिरिक्तानि ॥ १४ ॥

तत्रापि मेषं च मेषीं च कुर्वन्ति । तयोर्मेषे च मेष्यां च यद्यनेडकीरूर्णा विन्देत्ताः प्रणिज्य निश्लेषयेद्यद्यु अनेडकीर्न विन्देदथोऽअपि कुशोर्णा ऽएव स्युः ॥ १५ ॥

(स्त) तद्यन्मेषश्च मेषी च भवतः । (ऽ) एष वै प्रत्यक्षं वरुणस्य पशुर्यन्मेषस्तत्प्रत्यक्षं वरुणपाशात्प्रजाः प्रमुञ्चति यवमयौ भवतो यवान् हि जक्षुषीर्वरुणोऽगृह्णान्मिथुनौ भवतो मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति॥१६॥

---

तत्रापि मेषं च मेषीं च कुर्वन्ति । तयोर्मेषे च मेष्यां च यद्यनेडकीरूर्णा विन्देत्-ताः प्रणिज्य निश्लेषयेत् । यद्यु अनेडकीर्न विन्देत्-अथोऽअपि कुशोर्णा एव स्युः ॥ १५ ॥

तद् यन्मेषश्च मेषी च भवतः । एष वै प्रत्यक्षं वरुणस्य पशुः-यन्मेषः । तत्प्रत्यक्षं वरुणपाशात् प्रजाः प्रमुञ्चति । यवमयौ भवतः । यवान् हि जक्षुषीर्वरुणोऽगृह्णात् । मिथुनौ भवतः-मिथुनादेवैतद् वरुणपाशात् प्रजाः प्रमुञ्चति ॥ १६ ॥

---

अन्वाहार्यपचने इति । अन्वाहार्यो नामेष्टिः । दक्षिणाग्निभागे सकलः 'अग्निमामन्' इन्तुमैच्छन् तान् प्रजापतिरेतेन पयसान्येण मार्गेण 'अशमयन्' शमितवानिति यावत्, तस्माद्दक्षिणायैन देय ओदनो यस्मिन् पच्यते स तयोक्तः । तस्मिन् दक्षिणाग्नौ 'अनुधान्' तुषरहितान् 'कृत्वा' सम्भूर्ज्य 'तान्' 'ईषदिव' अल्पमिव 'उपतप्य' अपचितोदकेनालोड्य, तैः 'करम्भपात्राणि' भृष्टयवचूर्णाः करम्भाः, तन्मयानि पात्राणि 'कुर्वन्ति' अध्वर्युयजमानादयः । कियन्ति तानि पात्राणीत्यपेक्षायामाह-यावन्त इति । यावत्सङ्ख्याका यजमानस्य 'गृह्याः' स्वगृहे वर्तमाना पुत्रपौत्रादिरूपा ज्ञातयो भवेयुः, 'तावन्ति' तावत्सङ्ख्याकानि करम्भपात्राणि कार्याणि तानि च जनिष्यमाणापत्यार्थम्, 'एकेन' 'अतिरिक्तानि' अधिकानि कार्याणि ॥ १४ ॥

करम्भपात्रावशिष्टाद् यवपिष्टादेव मेषमेषीलक्षणमिथुनस्य निर्माणं विधत्ते-तत्रापीति । 'अपि'-शब्द एवकारार्थः । 'तत्र' करम्भपात्रनिर्माणसमये एव, तेनैव पिष्टेन मेषमेष्यौ कर्तव्ये । तयोरिति । सम्भूयानूदितयोः मेषे च मेष्यां च इति पृथगुपादानं विस्पष्टार्थम् । यद्यनेडकीरिति । एडको मेषः, तत्सम्बन्धरहिता अनेडक्यः, 'ऊर्णाः' कम्बलोपादानभूतानि तज्जातीयानि रोममयानि सूत्राणि यदि तादृशविधा ऊर्णाः 'विन्देत्' लभेत तदा 'ताः' 'प्रणिज्य' प्रक्षाल्य, तयोः मेषमेष्योः 'निश्लेषयेत्' सश्लेषयेत् 'यद्यु' यदि खलु 'अनेडकी' ऊर्णाः 'न विन्देत्' न लभेत, तर्हि 'कुशोर्णा एव स्युः' कुशमय्य एवोर्णाः, तयोः मेषमेष्योः सश्लेषणीयाः स्युः भवेयुः ॥ १५ ॥

मेषमेष्योः कारणमनूद्य स्तौति-तद्यदिति । वरुणस्य पशुर्यन्मेष इति । 'यद्' 'एषः' खलु 'प्रत्यक्षं'

---

१-'पिष्टचूर्णाः' इति पा. । २-'करम्भो दध्ना सक्तुना. पिष्टकृत' तन्मयानि पात्राणि करम्भपात्राणीति का. श्रौ. सू. ५।५।२ सू. या. दे । ३-मेषमिथुन च । का. श्रौ. सू. ५।५२ । ४-'नैडकी' इति पा. । ५-'एलको' इति पा. । ६-'तज्जातीयरोममयानि' इति पा. । ७-अनेडकीरूर्णाः प्रक्षाल्यास्थ्येतयोः । का. श्रौ. सू. ५।५।५३ । ८-कुशोर्णा वाऽभावे । का. श्रौ. सू. ५।५४ ।

स उत्तरस्यामेव पयस्यायां मेषीमवदधाति । दक्षिणस्यां मेषमेवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमाꣳसमुपशेते ॥ १७ ॥

स सर्वाण्येव हवीꣳष्यध्वर्युः । (कु) उत्तरस्यां वेदावासादयत्यथैतामेव पयस्यां प्रतिप्रस्थाता दक्षिणस्यां वेदावासादयति ॥ १८ ॥

( त्या ) आसाद्य हवीꣳष्यग्निं मन्थति । ( त्य ) अग्निं मन्थित्वानु प्रहृत्याभिजुहोत्यथाध्वर्युरेवाहाग्नये समिध्यमानायानुब्रूहीति ता ऽउभावेव-

---

स उत्तरस्यामेव पयस्यायां मेषीमवदधाति, दक्षिणस्यां मेषम् । एवमिव हि मिथुनं क्लृप्तम् । उत्तरतो हि स्त्री पुमांसमुपशेते ॥ १७ ॥

स सर्वाण्येव हवींष्यध्वर्युरुत्तरस्यां वेदावासादयति—अथैतामेव पयस्यां प्रतिप्रस्थाता दक्षिणस्यां वेदावासादयति ॥ १८ ॥

आसाद्य हवींष्यग्निं मन्थति । अग्निं मन्थित्वाऽनुप्रहृत्याभिजुहोति । अथाध्वर्युरेवाह—"अग्नये

---

'वरुणस्य' हविर्भूतं 'पशुं' अत एव पञ्चैकादशिन्याम्—'अथोराम सावित्रो वारुण कृष्ण एकशितिपात् पेत्व' इत्याम्नायते ( वा स २९।५८ ) । पेत्वो विगतपुंस्को मेष इति हि तदर्थः । यवमयाविति । यवमयश्च मेषो यवमयी च मेषी । "पुमान्स्त्रिया" ( पा सू १-२-६७ ) इति पुंस शेषः । यवविकारौ भवत इत्यर्थः । यवान् हीति । 'हि' यस्मात् 'यवान्' 'जक्षुषीः' भक्षितवतीः प्रजाः 'वरुणः' पाशेन 'अगृह्णात्' अतस्तद्यवमयत्वसंपादनाय मेषमेष्योर्यवमयत्वं संपादनमित्यर्थः । तयोः स्त्रीपुंसरूपतामनूद्य स्तौति—मिथुनौ भवत इति । 'मिथुनाद्'—इत्येतद् 'वरुणपाशाद्'—इत्यस्य विशेषणम् । द्वैरूप्याविकरणाधिकरणात् दक्षिणस्यां मेषो न भवति तु वैपरीत्येन तत्प्रमोचने हेतुः ॥ १६ ॥

अथ तयोः प्रक्षेपं विधत्ते—स इति । अध्वर्युकर्तृकायाम् 'उत्तरस्याम्' पयस्यायाम् एव 'मेषीम्' 'अवदधाति' प्रक्षिपति । प्रतिप्रस्थातृकर्तृकायां 'दक्षिणस्यां' मेषं' प्रक्षिपति । अनयोर्दक्षिणोत्तरभावं लोकन्यायेनोपपादयति—एवमिवेति ॥ १७ ॥

हविषामासादनं विधत्ते—स सर्वाण्येवेति । आग्नेयादीनि 'सर्वाण्येव हवींषि' 'उत्तरस्यां' 'वेदौ' वेद्यां 'स अध्वर्युः' 'आसादयेत्', 'प्रतिप्रस्थाता' 'एताम्' मारुती 'पयस्यामेव' 'दक्षिणस्यां' वेद्यामासादयेदित्यर्थः ॥ १८ ॥

हविरासादनानन्तरकालमग्निमथनं विधत्ते—आसाद्येति । अग्निं मथित्वेत्यादि । अग्निमथनानन्तरं जातम्

---

१—अथ मिथुनं वै मारुत्यां मेषम् । का श्रौ सू २२ ५ । ११३ । ११४ । २—'अत' २-६ प । ३—' सर्वाणि हवींषि उत्तरस्यामासादयति मारुती—दक्षिणस्यां प्रतिप्रस्थाता दाक्षिणात्यम् । ( का श्रौ सू ५।११५ ) ४—आसाद्य प्रमथनं । का श्रौ सू ५।२१ अमर्न्थेत्यादि । उक्तमाद्याय वेदा करोति २२ दक्षिणेति कुम्भवक्ष तामिम् २३ वर्वीस्यर्णीत्यथरतणि तयो २४ अनुप्रहृत्याभिजुहोति ॥२५ हृदय पुरस्ता इत्यादिनिधान २५ अग्नये समिध्यमानायानुब्रूहीति २६ पचाति गायत्रेणैति प्रतिमन्त्रं प्रदक्षिणम् २७ जातं जनयति, २८ प्रह्रियमाणर्येति मान्यन्ते । २९ मन्थन इति मन्थति ३० अग्ना यामीरिति जुहोति स्थाल्या स्रुवेण इन्द्रमिन्धन का० श्रौ० सू० ५ । २१-३१ ।

ध्मावभ्याधत्त ऽउभौ समिधौ परिशिꣳषत ऽउभौ पूर्वावाघारावाघारयतोऽथाध्वर्युरेवाहाग्निमग्नीत्सम्मृड्ढीत्यसम्मृष्टमेव भवति सम्प्रेषितम् ॥ १९ ॥

( मु ) अथ प्रतिप्रस्थाता प्रतिपरैति । स पत्नीमुदानेष्यन्पृच्छति केन चरसीति वरुण्यं वाऽएतत्स्त्रीकरोति यदन्यस्य सत्यन्येन चरत्यथो नेन्मेऽन्तःशल्या जुहवदिति तस्मात्पृच्छति निरुक्तं वा एनः कनीयो भवति सत्यꣳ हि भवति तस्मादेव पृच्छति सा यन्न प्रतिजानीत ज्ञातिभ्यो हास्यै तदहितꣳ स्यात् ॥ २० ॥

---

समिध्यमानायानुब्रूहि" इति । ता उभावेवेध्मावभ्याधत्तः, उभौ समिधौ परिशिꣳष्टः । उभौ पूर्वावाघारावाघारयतः । अथाध्वर्युरेवाह–'अग्निमग्नीत् सम्मृड्ढि' इति । असम्मृष्टमेव भवति संप्रेषितम् ॥ १९

अथ प्रतिप्रस्थाता प्रतिपरैति । स पत्नीमुदानेष्यन् पृच्छति–'केन चरसि' इति । वरुण्यं वा एतत् स्त्रीकरोति–यदन्यस्य सती–अन्येन चरति, 'अथो नेन्मेऽन्तःशल्या जुहवदिति' तस्माद् पृच्छति । निरुक्तं वा एनः कनीयो भवति । सत्यं भवति तस्मादेव पृच्छति । सा यन्न प्रतिजानीत–ज्ञातिभ्यो हास्यैतदहितं स्यात् ॥ २० ॥

---

'अग्निम्' आहवनीये "भवतन्नः"–( वा. सं. ५।३ ) इति मन्त्रेण 'अनुप्रहृत्य' प्रक्षिप्य, "अग्नावग्निः"–( वा. सं. ५।४ ) इति मन्त्रेणाभिजुहुयात् । एतच्चाग्निमन्थनादिकम् 'अध्वर्युः' एकः 'एव' कुर्यात्; न प्रतिप्रस्थातेत्यभिप्रायः । दक्षिणोत्तरयोरुभयोरप्याहवनीययोरग्न्यधिकरणत्वेनेध्माधानेन समिन्धनीयत्वात् तद्धेतुभूतः सामिधेनीप्रैषोऽपि अध्वर्युप्रतिप्रस्थातृभ्यामुभाभ्यां प्रयोक्तव्य इत्याशङ्क्याह–अथाध्वर्युरेवेति । 'एव'–कारः प्रतिप्रस्थातृ–व्यावृत्त्यर्थः । एकस्याहवनीयस्य देशभेदेन द्विधाऽवस्थानात्, प्रतिप्रस्थातुरेवाहवनीयान्तराभावात्, प्रैषस्य च होतुरुभयत्रैकत्वाद्, अध्वर्युणोच्यमान एव प्रैष उभयत्रोपकरोति, तावुभौ समिधावित्यभिप्रायः । इध्माधानादिकन्तु ताभ्यां समनुष्ठेयमित्याह–ता उभाविति । 'तौ' अध्वर्युप्रतिप्रस्थातारौ 'उभौ' 'समिधौ' इति व्यतिकरणे पदे । 'उभौ' अध्वर्युप्रतिप्रस्थातारौ अनुयाजार्थं 'समिधौ' परिशेषयत इत्यर्थः । 'अथाध्वर्योरेव कर्त्तव्यमाह–अथाध्वर्युरेवेति । हे 'अग्नीत्'; सामिधेनीप्रैषवत् 'अग्निम्' आहवनीयं 'सम्मृड्ढि' सम्मार्जनेन संस्कुरु । असंमृष्टमेवेति । करम्भपात्राणां होमस्य कालविधिः । अग्निमग्नीदिति सम्प्रैषे कृते तदर्थत्वात् आग्नीध्रेणानुष्ठिते इत्यर्थः ॥ १९ ॥

तस्य च करम्भपात्राणां होमस्य पत्नीकर्तृकत्व विधित्सुस्तस्यां सम्भावितस्य पुरुषान्तरसङ्गतिजनितस्यैनसः प्रश्नं दर्शयति–अथ प्रतिप्रस्थातेति । अग्निमग्नीदिति सम्प्रैषानन्तरं 'प्रतिपरैति' निवर्त्तते, पत्नी यत्रास्ते तं देशं प्रतिगच्छेदित्यर्थः । 'सः' च प्रतिप्रस्थाता 'पत्नीम्' 'उदानेष्यन्' उदानयिष्यन् तां पत्नीं 'पृच्छति'–हे पत्नि ! त्वं 'केन' जारेण 'चरसि' वर्त्तसे 'इति' । पुरुषान्तरसङ्गतेर्दोषान्तरतामाह–वरुण्यमिति । तेन पापेन हेतुना वरुणपाशबन्धो भवति, तत् पापं 'वरुण्यम्' । 'अन्यस्य' पुरुषस्य पत्नी 'सती', 'अन्येन' पुरुषान्तरेण सह 'चरति' वर्त्तते इति । यत्, एतत् वरुण्यमेव 'स्वीकरोति' ।

---

१–'व्यवच्छेदार्थं इत्यर्थ'–इ पा. । २–सम्मार्जनाभिमर्शनान्तरे प्रतिप्रस्थाता पत्नीमानेष्यन्नाह केन चरसीति । का० श्रौ० सू० ५।११६ ।

( तां ) तां वाचयति । प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषस इति यथा पुरोऽनुवाक्यैवमेषैतयैवैनानेतेभ्यः पात्रेभ्यो ह्वयति ॥ २१ ॥

तानि वै प्रतिपुरुषम् । यावन्तो गृह्याः स्युस्तावन्त्येकेनातिरिक्तानि भवन्ति तत्प्रतिपुरुषमेवैतदेकैकेन या अस्य प्रजा जातास्ता वरुणपाशात्प्रमुञ्चत्येकेनातिरिक्तानि भवन्ति तद्या एवास्य प्रजा अजातास्ता वरुणपाशात्प्रमुञ्चति तस्मादेकेनातिरिक्तानि भवन्ति ॥ ❀ २२ ॥

---

ता वाचयति " प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषसः"–( वा. सं.३ । ४४ ) इति । यथा पुरोऽनुवाक्या, एवमेवैषा । एतयैवैनानेतेभ्यः पात्रेभ्यो ह्वयति ॥ २१ ॥)

तानि वै प्रतिपुरुषं यावन्तो गृह्याः स्युः, तावन्ति, एकेनातिरिक्तानि भवन्ति । तत् प्रतिपुरुषमेवै-

---

प्रश्नु प्रतिप्रस्थातुरभिप्रायमाह–अथो इति । ' अथो ' अपि च यथा पत्नी ' अभि शम्या ' शरीरमध्ये दुश्चरितजनितम पापरूपेण शल्येन युक्ता सती ' न इत् ' नैव ' मे ' मदीयेऽग्नौ 'जुहवत्' जुहुयात् इति । 'तस्मात्' कृतस्य पापस्य प्रकाशनम् । तस्माद्वैवेति । ' उ '-शब्दोऽप्यर्थे, ' एव '-कारो भिन्नक्रम । तस्मादपि कारणात् ' पृच्छत्येवेत्यर्थः । विषये वाक्येऽन्याभिन पत्न्या अपि यथार्थभाषणं कर्तव्यमिति विधत्ते–सेति । ' यत् ' यदि ' सा ' पत्नी पृष्टमर्थं ' न प्रतिजानीत ' न प्रतिब्रूयात् ' तत् ' तदा, ' अमी ' षष्ठ्यर्थे चतुर्थी, अस्या पत्न्या ' ज्ञातिभ्य ' ' अहितम् ' अनिष्टं स्यात्, तस्मात् वस्तुतो विद्यमानं वृत्तान्तमाचक्षीतेत्यर्थः । तैत्तिरीयब्राह्मणे–"यजार मनस न प्रब्रूयात्, प्रिय ज्ञाति रुन्ध्यात्, असौ मे जार इति निर्दिशेत् " इति–( तै. ब्रा. १।६।५।२ ) तदुक्त कात्यायनेन–" प्रतिप्रस्थाता पत्नीमानेष्यन्नाह केन चरसीति, सत्युनामवेष्टे "–इति । सत्युता परिचिता जारा इत्यर्थः ॥ २० ॥

तस्या वाचन विधत्ते–ता वाचयतीति । " प्रघासिन " इत्यादिर्वाचनीयो मन्त्र । तस्यायमर्थ –'प्रघासिन' प्रघास प्रयन्नादनीय भोज्य हवि , तद्वन्तो ' मरुत ' "शुक्रज्योतिश्च चित्रज्योतिश्च"–( वा० सं० । ७ । ८० । ८१ ) इत्यादिना प्रतिपादितनामधेयान् एकोनपञ्चाशन्मरुत्वान् देवान् ' हवामहे ' आह्वयाम । मरुतो ' रिशादस ' रिशा हिंसका शत्रव , तेषा निरसितार ' करम्भेण ' करम्भपात्ररूपेण हविषा सजोषस. समानप्रीतयश्च भवन्ति, तान् मरुत इति ॥

एतन्मन्त्र पुरोऽनुवाक्यानुवचनसादृश्येन स्तौति–यथेति ' पुरोऽनुवाक्या ' हि वक्ष्यमाणदेवताह्वानार्था, ' एवम् एव ' ' एषा प्रघासिन इत्यृक्' अत ' एतया एव ' ' एनान् ' मरुत. ' एतेभ्य ' पात्रेभ्य ' करम्भपात्रेभ्य ' ह्वयति ' होष्यमाण करम्भपात्रलक्षण हविर्भोक्तुमाह्वयतीत्यर्थः. ॥ २१ ॥

करम्भपात्राणि कुर्वन्ति यावन्तो गृह्या स्युस्तावन्ति–इति वाक्येन प्रागभिहितम् ( श. प. २।५।२।१४ )

---

२१ इत्यत्र्नि=जानश्रुनैरित्युच्यते । तदाह कात्यायन । प्रश्नाभ्यो वा जानश्रुतेरिति=श्रौ सू. अ ५क. ३ सू ४ ।

१–" पत्नीं एतावन्तो मे जारा इति नामधाइ कथयति, अमुना अमुना जारेण सह चरामीति वा, नो चेज्ञात्येनैति । कदि । लज्जादिवशात् न कथयति, प्रतिवार तृणानि करुत्कानि " । का० श्रौ० सू० ५ । १२० तृणानि चोद्धृतानि प्रतिप्रस्थातुः । अनन्तरमादित ज्ञातेभ्य इति पूर्वे । का० श्रौ० सू० ५ । ११६ । २–'परैजता '–द. पा. ।

३–" आश्वाय प्रघासिन इत्येना वाचयति नवम् का' ५ । १२० ।

पात्राणि भवन्ति । पात्रेषु ह्यशनमश्यते यवमयानि भवन्ति यवान्हि जक्षुषीर्वरुणोऽगृह्णाच्छूर्पेण जुहोति शूर्पेण ह्यशनं क्रियते पत्नी जुहोति मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति ॥ २३ ॥

पुरा यज्ञात्पुराहुतिभ्यो जुहोति । अहुतादो वै विशो विशो वै मरुतो यत्र वै प्रजापतेः प्रजा वरुणगृहीताः परिदीर्णा अनत्यश्च प्राणत्यश्च शिशियिरे च निषेदुश्च तद्धासां मरुतः पाप्मानं विमेथिरे तथो एवैतस्य प्रजानां मरुतः पाप्मानं विमथ्नते तस्मात्पुरा यज्ञात्पुराहुतिभ्यो जुहोति २४

---

यदेकैकेन—या अस्य प्रजा जाताः ता वरुणपाशात् प्रमुञ्चति । एकेनातिरिक्तानि भवन्ति । तथा एवास्य प्रजा अजाताः, ता वरुणपाशात् प्रमुञ्चति । तस्मादेकेनातिरिक्तानि भवन्ति ॥ २२ ॥

पात्राणि भवन्ति । पात्रेषु ह्यशनमश्यते । यवमयानि भवन्ति । यवान् हि जक्षुषीर्वरुणोऽगृह्णात् । शूर्पेण जुहोति । शूर्पेण ह्यशनं क्रियते । पत्नी जुहोति । मिथुनादेवैतद्वरुणपाशात् प्रजाः प्रमुञ्चति २३

पुरा यज्ञात्पुराहुतिभ्यो जुहोति । अहुतादो वै विशः । विशो वै मरुतः । यत्र वै प्रजापतेः प्रजा वरुणगृहीताः परिदीर्णा अनत्यश्च, प्राणत्यश्च,—शिशियिरे च, निषेदुश्च—तद्धासां मरुतः पाप्मानं विमेथिरे । तथो एवैतस्य प्रजानां मरुतः पाप्मानं विमथ्नते । तस्मात् पुरा यज्ञात् पुराहुतिभ्यो जुहोति ॥ २४

---

तदनूद्य स्तौति—तानि वा इति । 'प्रतिपुरुषं' पुरुषं पुरुषं प्रत्येकैकं करम्भपात्रं भवति । यावन्त इत्याद्युक्तार्थम् । पुरुषसङ्ख्यया पात्रनिर्माणस्य प्रयोजनमाह—तत् प्रतिपुरुषमिति । 'अस्य' यजमानस्य 'याः प्रजाः जाताः' 'ताः' 'प्रतिपुरुषं' प्रत्येकम् 'एकैकेन' पात्रेण 'वरुणपाशात्' 'प्रमुञ्चति' एकातिरिक्तत्वमेषामनूद्य स्तौति—एकेनेति । जनिष्यमाणानां प्रजानां वरुणपाशविमोचनार्थमेकमतिरिक्तं कर्त्तव्यमित्यर्थः ॥ २२ ॥

पुरोडाशादिष्वेतां विहाय पात्ररूपेण निर्माणमुपपादयति—पात्राणीति । 'हि' यस्मात् 'पात्रेषु' कांस्यादिनिर्मितेषु 'अशनम्' अन्नम् 'अश्यते' भुज्यते, अतो महता यवस्वरूपस्यान्नस्य भोजनीयपात्ररूपेणैवैतानि निर्मातव्यानीत्यर्थः । यवमयत्वमनूद्य स्तौति—यवमयानीति । 'जक्षुषीः' भक्षितवतीरित्यर्थः । अथ तेषां करम्भपात्राणां होमं विधत्ते—शूर्पेणेति । स्रुगादिपात्रं विहाय शूर्पेणैवैतानि जुहुयात् । तेन हि 'शूर्पेण' तुषनिर्वपनद्वारा 'अशनम्' अन्नं 'क्रियते' अतः शूर्पहवनं प्रशस्तम् । न चात्र शूर्पो हेत्वर्थः शङ्कनीयः; "हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम्, स्तुतिस्तु शब्दपूर्वत्वात्" (जै. सू. मी. १ । २ । २९–३० अधि० २) इत्यधिकरणे स्तुतित्वेनान्वयस्य प्रतिपादितत्वात् 'पत्नी जुहोति' इति कर्तृविधिः । 'मिथुनादेव' इत्यादि तत्प्रशंसा । स्त्रिया अपि कर्तृत्वेन होमेऽन्वयात् मिथुनं सम्पद्यते । तथा च यजमानपत्नीरूपान्मिथुनादेवेत्ययमर्थः सिध्यति ॥ २३ ॥

स्रुवाघारहोमादेः पूर्वभावित्वं करम्भपात्रहोमस्य विधत्ते—पुरेति । यैज्ञो वषट्कारप्रदानो यजतिचोदित आग्नेय-

---

१–'एतदतिरिक्तानाम्–' इ० पा० । २–करम्भपात्राणि जुहोति शूर्पेण मूर्द्धनि कृत्वा दक्षिणेऽग्नौऽप्रत्यङ्मुखौ जायापती वा दक्षिणेनाहत्य पूर्वेण वेदिमपरेण यद्वास इति (का श्रौ. सू. ५ । २१) । पत्नी शूर्पं मूर्द्धनि कृत्वाऽऽगच्छति । शूर्पं मस्तकादधोऽवतार्य शूर्पेणैव करम्भपात्राणि जुहोति । न ■ शीर्षावस्थितशूर्पेण । आयातनीहोमपक्षे यजमानः पत्नीमन्वारभते । इति कर्काचार्यः । ३–'पराववनद्वारा'–इ. पा. । ४–"तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतयः–" (का.श्रौ.सू. अ. १ सू.२५) ।

( ह्रा ) अुथैन्द्रीं मुरुत्वतीं जपति । युत्र वै प्रुजापतेः प्रुजानां मुरुतः पाप्मानं व्विमेथिरे तुद्देक्षाञ्चक्रऽइमे ह मे प्रजा न व्विमश्नीरन्निति ॥ २६ ॥

स एुतामैन्द्रीं मरुत्वतीमजपत्क्षत्रं वाऽइन्द्रो व्विशो मरुतः क्षत्रं वै व्विशो निषेद्धा निुषिद्धा असन्निति तुस्मादैन्द्री ॥ २७ ॥

मो षू णः । ( ऽ ) इन्द्रात्र पृत्सु देुवैरुस्ति हि ष्मा ते शुष्मिन्नवयाः । महश्चिद्युस्य मीढुषो युव्या हुविष्मतो मुरुतो व्वन्दते गीुरिति ॥ २८ ॥

---

अथैन्द्रीं मरुत्वतीं जपति । यत्र वै प्रजापतेः प्रजानां मरुतः पाप्मानं विमेथिरे–तद्देक्षाञ्चक्रे–' इमे ह मे प्रजा न विमश्नीरन् ' इति ॥ २६ ॥

स एतामैन्द्रीं मरुत्वतीमजपत् । क्षत्रं वा इन्द्रः, विशो मरुतः । क्षत्रं वै विशो निषेद्धा । ' निषिद्धा असन् ' इति तस्मादैन्द्री ॥ २७ ॥

"मो षू ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः।महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः"–इति ॥ २८ ॥

---

यजमानस्य मन्त्रजपं विधत्ते–अथेति । ' अथ '–शब्दो होमानन्तर्ये, ' ऐन्द्रीम् ' इन्द्रदेवताकाम्, ' मरुत्वतीं ' मरुत्वच्छब्दयुक्ताम्, " मो षू ण इन्द्र "–इत्यादिकामृचं यजमानो जपेदित्यर्थः । उक्तं हि सूत्रकृता–" मो षू ण इति यजमानो जपति "–( का. श्रौ. सू. ९ । १३२ ) इति मरुत्वदिन्द्रदेवताकामृचं प्रशंसति–यत्रेति । मरुतः पाप्मानमित्यादि । यदा खलु वरुणपाशेन बद्धाः प्रजाः, तदा तासां यद् बन्धनकारणं पापं मरुतः, ' विमेथिरे ' विलोपितवन्तः, ' तत् ' तदानीं प्रजापतिः खलु ' ईक्षाञ्चक्रे' पर्यालोचितवान्–' इमे ' खलु ' मरुतः ' मदीयाः ' प्रजाः ' न विमश्नीरन् न विनाशयेरन् इति ॥ २६ ॥

स एतामिति । ' सः ' प्रजापतिः पूर्वोक्तरूपं पर्यालोच्य ' एताम् ऐन्द्रीं मरुत्वतीम् ' ऋचम् ' अजपत् ' अत्रेन्द्रस्य प्रसङ्गमाह–क्षत्रं वा इति । ' इन्द्रः ' खलु क्षत्रियजातिः, तस्येन्द्रस्य ' विशो मरुतः', क्षत्रियो हि प्रजाना ' निषेद्धा ' निरोधकः, तेनेन्द्रेण ' निषिद्धाः ' निवारिता भवेयुः । ' इति ' अनेनाभिप्रायेणेन्द्रदेवताका ऋचो जप इत्यर्थः. ॥ २७ ॥

तामृचं पठति–मो ष ण इति । अस्यायमर्थः हे–'इन्द्र' ! 'अत्र ' एषु ' पृत्सु ' संग्रामनामैतत् । 'नः ' अस्मदीयाः प्रजाः 'मा उ सु' हिंसीः । हे 'शुष्मिन्' बलवन्निन्द्र ! ' देवैः ' मरुद्भिः सहितस्य ' ते ' तव 'अवयाः' अवयजनाद् यज्ञैः " अवयाः–श्वेतवाः "–( पा. सू. ८ । २ । ६७ ) इति निपात्यते । अवयजनरूपकर्म्मणा पापहीनः " अस्ति ' खलु ' महश्चित् ' महतोऽपि ' मीढुषः ' सेक्तुः यव्याः " सुपां सुलुक् "–( पा. सू. ७ । १ । ३९ ) इति भिस आडादेशः । यवमयैर्हविर्भिः ' हविष्मतः ' ' यस्य ' इन्द्रस्य ' मरुतः ' देवान्

---

1–महीधरस्तु–' अवयाः ' अवयुतो यागः ' अस्ति हि स्म ' विद्यते खलु । अवयूतस्य यज्ञैरेतद्रूपम् ' इत्याह । ' किंच पौरस्त्येव स्तुतिरूपा वाक् मरुतो भवतः सर्वान् वन्दते नमस्करोति, " नमो मरुद्भ्यः " इत्येवमाकारत्वात् स्तुतेर्नमस्कारस्वरूपत्वात्– ' इति व्याचख्यौ ।

( त्यु ) अथैनां वाचयति । ( त्यु ) अक्रन्कर्म कर्मकृत इत्यक्रन् हि कर्म कर्मकृतः सह वाचा मयोभुवेति सह ह्रि वाचाऽक्रन्देवेभ्यः कर्म कृत्वेति देवेभ्यो हि कर्म कृत्वाऽस्तं प्रेत सचाभुव इत्यन्यतो ह्येतया सह भवन्ति तस्मादाह सचाभुव इत्यस्तं प्रेतेति जघनार्धो ह्य एष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रासीषदद्गृहा वाऽअस्तं गृहाः प्रतिष्ठा तद्गृहेष्वेवैना-मेतत्प्रतिष्ठायां प्रतिष्ठापयति ॥ २९ ॥

---

अथैना वाचयति–"अक्रन् कर्म कर्मकृतः"–(वा० ३।४७।) इति। अक्रन् हि कर्म कर्मकृतः। " सह वाचा मयोभुवा "–( वा० ३।४७ ) इति। सह हि वाचाऽक्रन्। " देवेभ्यः कर्म कृत्वा "–( वा ३-४७ ) इति। देवेभ्यो हि कर्म कृत्वा। " अस्तं प्रेत सचाभुवः " ( वा० ३।४७ ) इति। अन्यतो ह्येतया सह भवन्ति। तस्मादाह–सचाभुव इति। अस्तं प्रेतेति। जघनार्धो वा एष यज्ञस्य–यत्पत्नी। तामेतत् प्राचीं यज्ञं प्रासीषदत्। गृहा वा अस्तम्, गृहाः प्रतिष्ठा। तद्गृहेष्वेवैनामेतत् प्रतिष्ठायां प्रतिष्ठापयति ॥ २९ ॥

---

अनुचरन् ' गी ' स्तुतिरूपा वाक् ' कृत्न ' स्तौति " वदि अतिरञ्जनस्तुयो "–इति धातु ( धा. पा. भ्वा प ११ ) ' इति ' इत्यस्य पूर्वेणान्वयः ॥ २८ ॥

पत्न्या वाचन विधत्ते–अथैनामिति। न वाचनीय मन्त्र पदशोऽनूद्य व्याचष्टे–अक्रन् कर्मेति। कर्म कुर्वन्तीति ' कर्मकृत ' य यजमानस्यात्विजा, ते हि इदानीं यज्ञस्यात्मकहोमस्य ' कर्म ' ' अक्रन् ' अकार्षुः अतोऽक्रन् कर्मेति मन्त्रभागवचनं युक्तम्। द्वितीयपादस्यार्थं प्रसिद्ध इत्याह–सह इति। ' मयोभुवा ' मयस सुखस्य भावयित्र्या मन्त्ररूपया वाचा सह एतत् कर्म ' अक्रन् ' अकार्षुः। देवेभ्य इत्यादि। हे यजमानस्यात्विजा कर्मिणः ! यूयं यज्ञस्याङ्गभूतस्य समस्तहोमस्य च कर्म देवार्थं ' कृत्वा ' ' अस्तं ' गृहमस्मिन् यजमानस्य गृहम् ' सचाभुव ' पत्न्या सह भवन्त, सह वर्तमाना ' प्रेत ' अभिगच्छतेति मन्त्रभागस्यार्थः। सचाभुव इत्येतद् व्याचष्टे–अन्यत इति। अन्यस्मात् देशाद् पत्न्यासन-लक्षणात् ' एतया ' आहवनीयसमीपं प्राप्तया पत्न्या सह ऋत्विजः सर्वे भवन्ति, तस्मात् सचाभुव इत्येतद् यथार्थम्। अस्तं प्रेत इत्यस्याभिप्रायमाह–जघनार्धो वा इति। तामेतत् प्राचीमिति यज्ञस्यारम्भेऽवस्थिता ' एतत् ' ' एतर्हि ' प्राचीं ' प्राग् गच्छन्तीं पूर्वाभिमुखीं ' यज्ञं ' ' प्रासीषदत् ' प्रापयत् अभिमुखीं प्राप्ता। तद्यथैवेतत् इति यदि इत्यम्। गृहा वा अस्तमिति। अस्यते क्षिप्यते सर्वं वस्तुजातमस्मिन्निति ' अस्तं गृहम् ' " क्तोऽधिकरणे च "–इति ( पा सू. ३।४।७६ ) क्तप्रत्ययः। एतत् ' एतेन ' अस्तं प्रेत '–इति मन्त्रभागवचनेन गृहस्थापनात्र ' प्रतिष्ठाया ' पुनः ' एना ' स्थापितवान् भवति ॥ २९ ॥

---

१–अक्रन्कर्मेत्येनां वाचयति प्रतिस्थितु ( कर्के )। का श्रौ सू ।१।१२३। प्रतिप्रस्थातेत्येवमर्थे नित्यं प्रतिस्थनमेति।

प्रतिपराणीयोंदिति प्रतिप्रस्थाता । सम्मृजन्त्यग्निᳯं सम्मृड्ढेऽग्नी ताऽउभा-वेवोत्तरतआवाराश्रावयतोऽथाध्वर्युरेवाश्राव्य होतारं प्रवृणीते प्रवृतो होतो-त्तरस्य वेदेर्होतृषदन ऽउपविशत्युपविश्य प्रसौति ताऽउभावेव प्रसूतौ स्रुचऽ आदायातिक्रामतोऽतिक्रम्याथाश्राव्याध्वर्युरेवाह समिधो यजेति यज यजेति चतुर्थे चतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः ॥ ३० ॥

(ता॒ऽ) अथाध्वर्युरेवाहाग्नयेऽनुब्रूहीति । (त्या) आग्नेयमाज्यभागं ताऽउभावेव

प्रतिपराणीयोदिति प्रतिप्रस्थाता । सम्मृजन्त्यग्नीन् । सम्मृड्ढेऽग्नी ता उभावेवोत्तरत आश्रावयतः । अथाध्वर्युरेवाश्राव्य होतारं प्रवृणीते । प्रवृतो होतोत्तरस्य वेदेर्होतृषदन उपविशति । उपविश्य प्रसौति । ता उभावेव प्रसूतौ स्रुच आदायातिक्रामतः । अतिक्रम्याश्राव्याध्वर्युरेवाह—समिधो यज इति । 'यज यज ' इति चतुर्थे चतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः ॥ ३० ॥

अथाध्वर्युरेवाह—' अग्नयेऽनुब्रूहि ' इति—आग्नेयमाज्यभागम् । ता उभावेव चतुरवत्तस्यावद्या-

अकृत् कर्माणि मन्त्रपाठानन्तरं कर्तव्यमुपदिशति—प्रतिपराणीयोदितीति । पत्नीं प्रतिनिवर्त्य स्वस्थानं प्रापयितु ' प्रतिप्रस्थाता ' ' उदैति ' उद्गच्छेत् । इत्यम् " अग्निमग्नीत् "—इति प्रैषसम्मार्जनयोर्मध्ये कर्तव्यमुक्त्वा, तत्सम्मार्जनप्रभृति प्रकृतिवदेवानुष्ठेयमिति दर्शयति—सम्मृजन्तीत्यादिना । एकस्मिन्नप्याग्नीध्रे पूजार्थं बहुवचनम् । एवमाहवनीये ' अग्नी ' ' सम्मृड्ढे ' ' उभावेव ' एवकारोऽप्यर्थे । उभावपि अध्वर्युप्रतिप्रस्थातारौ ' उत्तरो आघारौ आघारयतः ' दीर्घेणाघारया जुहूं हविर्भेदेनैव नास्ति भेदः प्रतिप्रस्थातुरपि दक्षिणेऽग्नौ आघारादिकं सर्वं प्रयोगजातमध्वर्युवदनुष्ठेयम् । अत एव तैत्तिरीयकम्—" यदेवाध्वर्युः करोति तत् प्रतिप्रस्थाता करोति " इति । अध्वर्युरेवाश्रावयेदित्यादि । प्रवरप्रयाजाज्यभागादिसम्प्रैषस्य प्रेष्यस्य होतुरेकत्वात् कालभेदाभावाच्चाध्वर्युणैव कृत, एष उभयत्रापि तन्त्रेणोपकरोतीत्येवकाराभिप्रायः । प्रवरादीनां चोदकप्राप्तानामनुवादः । तेषां स्वरूपं प्रथमकाण्डे ( श. प. १।५।१ ) व्याख्यातमिति नेह पठ्यते । प्रतिप्रस्थातुरपि कर्तव्यं प्रतिपादयति—उत्तरस्य वेदेरित्यादि । होता सदित्यस्मिन्निति होतृषदनम् । उत्तरस्या वेद्याः सम्बन्धिनि ' होतृषदने ' स्थाने, न दक्षिणस्या इत्यर्थः । ' प्रसौति ' अध्वर्युप्रतिप्रस्थातारौ प्रयाजान् कर्तुं स्रुगादाने प्रेरयति " षू प्रेरणैश्वर्ययोः "—( धा. पा. अ. प. ३१ ) इति धातुः । ' प्रसूतौ ' प्रेरितौ, अनुज्ञातावित्यर्थः । स्रुच आदायेति । अध्वर्युप्रतिप्रस्थात्रोरुभयोरपि प्रत्येकं जुहूपभृतौ स्तः, तदभिप्रायेण स्रुच इति बहुवचनम् । " समिधो यज "—इति प्रथमप्रयाजसम्प्रैषः । द्वितीयादिषु " यज " इत्येव सम्प्रैषः । वीप्सा द्वितीयादिषु सर्वत्र सम्बन्धार्था । " चतुर्थे चतुर्थे " इति वीप्सा कर्तृद्वित्वापेक्षया । उभावपि ' चतुर्थे चतुर्थे प्रयाजे ' अपि जुहूमाज्यं जुह्वं ' समानयमानौ ' प्रतिनयन्तौ ' नवभिः ' नवसङ्ख्याकैः ' प्रयाजैः चरतः ' ॥ ३० ॥

आज्यभागयोरपि प्रतिप्रस्थातृसाहित्यं विधातुमाह—अथाध्वर्युरिति । उभावेवेति । उभावपि अध्वर्यु-

१—आनते सम्मार्जनाद्याज्यभागाभ्याम् । का. श्रौ. सू. ५ । १२४ ॥ २—स्रुग्भ्याणिरुत्ते प्रतिप्रस्थाता । का श्रौ. सू. ५ । १२५ । ३—प्रवृतेऽतिमित्युक्ते स्रुचावादायातिक्रम्याश्राव्याह समिधो यजेति पञ्चप्रयाजान्समिद्धन्ते । यजयजेति शेषम् । का. श्रौ. सू. ५ । १५ । ३६ । ४—नवप्रयाज नवानुयाजं । वैश्वदेव पर्व । ब्राह्मणपाठश्च महाहविष । का. श्रौ. सू. ५ । ३२ । ३३ ।

चतुरग्न्यस्यावदायातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाहाग्निं यजेति तावुभावेव वषट्कृते जुहुतः ॥ २१ ॥

(तौ) अथाध्वर्युरेवाह सोमायानुब्रूहीति । सौम्यमाज्यभागं तावुभावेव चतुरग्न्यस्यावदायातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाह सोमं यजेति तावुभावेव वषट्कृते जुहुतः ॥ २२ ॥

(स्त) तद्यत्किंच वाचा कर्तव्यम् । (म) अध्वर्युरेव तत्करोति न प्रतिप्रस्थाता तद्यदध्वर्युराश्रावयतीहैव यत्र वषट् क्रियते ॥ २३ ॥

कृतानुकर एव प्रतिप्रस्थाता । क्षत्रं वै वरुणो विशो मरुतस्तत्क्षत्रायैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति प्रत्युद्यामिनीᳩह क्षत्राय विशं कुर्याद्यदपि प्रतिप्रस्थाताऽऽश्रावयेत्तस्मान्न प्रतिप्रस्थाताऽऽश्रावयति ॥ २४ ॥

---

यातिक्रामतः । अतिक्रम्याश्राव्याध्वर्युरेवाह–' अग्निं यज ' इति । तौ उभावेव वषट्कृते जुहुतः ॥ २१ ॥

अथाध्वर्युरेवाह–' सोमायानुब्रूहि ' इति–सौम्यमाज्यभागम् । तौ उभावेव चतुरग्न्यस्यावदायातिक्रामतः । अतिक्रम्याश्राव्याध्वर्युरेवाह–'सोमं यज ' इति । तौ उभावेव वषट्कृते जुहुतः ॥ २२ ॥

तद्यत् किंच वाचा कर्तव्यम्–अध्वर्युरेव तत् करोति, न प्रतिप्रस्थाता । तद्यदध्वर्युराश्रावयति इहैव यत्र वषट् क्रियते ॥ २३ ॥

कृतानुकर एव प्रतिप्रस्थाता । क्षत्रं वै वरुणो, विशो मरुतः । तत् क्षत्रायैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति प्रत्युद्यामिनीं ह क्षत्राय विशं कुर्यात् । यदपि प्रतिप्रस्थाताऽऽश्रावयेत् । तस्मान्न प्रतिप्रस्थाताऽऽश्रावयति ॥ २४ ॥

---

प्रतिप्रस्थातारौ ध्रौवस्य 'आज्यस्य' सकाशात् 'चतुरवदाय' चतुर्गृहीत्वेत्यर्थः । वषट्कृते जुहुत इति । एकस्मिन्नेव वषट्कारे द्वावपि स्वस्वाहवनीये जुहुत इत्यर्थः ॥ २१ ॥

अथाध्वर्युरेवाह सोमायेत्यादि । एतेन द्वितीयाज्यभागस्यानुष्ठानप्रकारः प्रतिपादितः ॥ २२ ॥

सामिधेनीनिवादौ 'आश्राव्य' आश्रावणं चाध्वर्युरेवेति तत्र तत्र यत् प्रसक्त्या उक्तम्, तदिदानीं विवृणोति–तद्यदिति । 'यत्' किमपि आश्रावणादिक 'वाचा कर्तव्यं' वागिन्द्रियसाध्यमिति, 'तत्' 'अध्वर्युरेव' कुर्यात् । 'प्रतिप्रस्थाता' तूष्णीं क्रियमाणमनुतिष्ठेत्, आश्रावणादिकं वाचा न प्रयुञ्जीत । इमामेव श्रुतिमभिप्रेत्य सूत्रितमापस्तम्बेन–"यत् किंच वाचा कर्माणि अध्वर्युरेव तत् कुर्यात्" ( आप. श्रौ. सू. ८।५ । १७ )इति । अस्य नियमस्य प्रयोजनमाह–तद्यदिति । 'यत्र' उत्तरस्या वेदेः 'वषट् क्रियते' होत्रा वषट्कारः प्रयुज्यते । 'इहैव' अस्मिन्नेव स्थाने 'अध्वर्युरेक एव आश्रावयति' ॥ २३ ॥

कृतानुकर एवेति । 'प्रतिप्रस्थाता' अध्वर्युणा प्रथमं कृतस्य केवलमनुकर्तैव भवति न त्वासां पृथगा-

---

१–[illegible] प्रतिप्रस्थाता । । का. श्रौ. सू.-५ । ११० । न करोतीत्यर्थः ।

पाणावेव प्रतिप्रस्थाता । स्रुचौ कृत्वोपास्तेऽथाध्वर्युरेवैतैर्हविर्भिः प्रचरत्याग्नेयेनाष्टाकपालेन पुरोडाशेन सौम्येन चरुणा सावित्रेण द्वादशकपालेन वाऽष्टाकपालेन वा पुरोडाशेन सारस्वतेन चरुणा पौष्णेन चरुणैन्द्राग्नेन द्वादशकपालेन पुरोडाशेन ॥ २५ ॥

( ब्रा ) अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ विपरिहरतः । स यो मेषो भवति मारुत्यां तं वारुण्यामुपदधाति या मेषी भवति वारुण्यां तां मारुत्यामुपदधाति तद्यदेवं विपरिहरतः क्षत्रं वै वरुणो वीर्यं पुमान्वीर्यमेवैतत्क्षत्रे धत्तोऽवीर्या वै स्त्री विशो मरुतस्तदवीर्यामेवैतद्विशं कुरुतस्तस्मादेवं विपरिहरतः ॥ २६ ॥

---

पाणावेव प्रतिप्रस्थाता स्रुचौ कृत्वोपास्ते । अथाध्वर्युरेवैतैर्हविर्भिः प्रचरति—आग्नेयेनाष्टाकपालेन पुरोडाशेन, सौम्येन चरुणा, सावित्रेण द्वादशकपालेन वाऽष्टाकपालेन वा पुरोडाशेन, सारस्वतेन चरुणा, पौष्णेन चरुणा, ऐन्द्राग्नेन द्वादशकपालेन पुरोडाशेन ॥ २५ ॥

अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ विपरिहरतः । स यो मेषो भवति मारुत्यां—तं वारुण्यामवदधाति । या मेषी भवति—वारुण्यां—तां मारुत्यामवदधाति । तद् यदेवं विपरिहरतः । क्षत्रं वै वरुणो वीर्यं पुमान्, वीर्यमेवैतत् क्षत्रे धत्तः । अवीर्या वै स्त्री, विशो मरुतः, तदवीर्यामेवैनद्विशं कुरुतः । तस्मादेवं विपरिहरतः ॥ २६ ॥

---

श्रावणं कुर्यात् । तथा क्षत्राय क्षत्रियाय 'विशं' वैश्यजातिं 'कृतानुकरां' कृतानुकुर्वाणाम् 'अनुवर्त्मानम्' अनुगमनशीलां 'करोति' । विपक्षे बाधमाह—प्रत्युद्यामिनीमिति । 'यद्' यदि हि अध्वर्युवत् प्रतिप्रस्थातापि पृथगाश्रावणं कुर्यात्, तदा 'क्षत्राय' वैश्यजातिं 'प्रत्युद्यामिनीं' प्रत्युद्यमनशीलां 'कुर्यात्' । तस्मादिति, उक्तार्थानुगमनम् ॥ २४ ॥

पाणावेवेति । एवमुभौ अध्वर्युप्रतिप्रस्थातारौ आज्यभागाभ्यां प्रचर्य, 'प्रतिप्रस्थाता' हस्त एव जुहूपभृतौ धारयन् 'उपास्ते' उपतिष्ठति, आ पयस्याप्रचरणकालात् । 'अध्वर्युः' तु 'एतैः' आग्नेयादिभिः स्वैर्यथासादितैः 'हविर्भिः' 'प्रचरति' । तानि हवींषि परिगणयति—आग्नेयेनेत्यादिना ॥ २५ ॥

अथैताभ्यामित्यादि । एवमैन्द्राग्नपर्यन्तैः षड्भिर्हविर्भिरिष्ट्वा 'अथैताभ्यां' वारुणीमारुतीभ्यां 'पयस्याभ्यां' 'प्रचरिष्यन्तौ' यज्ञ तावध्वर्युप्रतिप्रस्थातारौ मेषमेष्यौ 'विपरिहरतः' । तदेव विपरिहरणं दर्शयति—स य इति । "सः उत्तरस्यामेव पयस्यायां मेषीम्"—(श. प. २ । ५ । १ । १३ ।) इत्यादिना विधानात् 'वारुण्यां मेषी' स्यात् 'मारुत्यां मेषः' । तत्र यो मारुत्यां मेषो भवति, तं ततः आहृत्य वारुण्यां स्थापयेत् ।

---

१—हस्तायुक्तयोरन्यत्र दक्षिणस्याम् । का. श्रौ. सू ५ । १११ । २—स्रुक्पाणिरास्ते प्रतिप्रस्थाता । का. श्रौ. सू. ५ । १२५ ।
३—हविर्भिश्चरति । अध्वर्युः । का. श्रौ. सू ५ । १२६ ।

( तु॒ा२ ) अथाध्व॒र्युरे॑वाह॒ व्रुरुणायानुब्रू॒हीति । स ऽउपस्तृ॒णीतऽआ॒ज्यमु॒थास्यै॒ व्वारु॒ण्यै॒ पय॒स्यायै॒ द्विरव॒द्यति॒ सोऽन्यत॑रेणावदा॒नेन॑ सह मे॒षमव॑दधात्य॒थोप॑रिष्टादा॒ज्यस्या॑भि॒घारयति॒ प्रत्य॑नक्त्यवदा॒ने ऽअति॑क्रामत्यति॒क्रम्या॑श्रा॒व्याह॒ व्रुरु॑णं य॒जेति॒ व्वष॑ट्कृते जु॒होति ॥ २७ ॥

स॒व्ये पा॒णाव॑ध्व॒र्युः स्रु॒चौ कृ॒त्वा । द॒क्षि॒णेन॑ प्रतिप्रस्था॒तुर्व्वां॑सोऽन्वा॒रभ्या॑ह म॒रुद्भ्योऽनुब्रूहीत्यु॑पस्तृ॒णीतऽआ॒ज्यं प्रति॑प्रस्था॒ताऽथा॑स्यै॒ मा॒रु॒त्यै॒ पय॒स्यायै॒ द्विरव॒द्यति॒ सोऽन्यत॑रेणावदा॒नेन॑ सह॒ मे॒षीमव॑दधात्य॒थोप॑रिष्टादा॒ज्यस्या॑भि॒घारयति॒ प्रत्य॑नक्त्यवदा॒ने ऽअति॑क्रामत्य॒थाध्व॒र्युरे॑वाश्रा॒व्याह॒ म॒रुतो॑ य॒जेति॒ व्वष॑ट्कृते जु॒होति ॥ २८ ॥

---

अथाध्वर्युरेवाह–'वरुणायानुब्रूहि' इति । स उपस्तृणीत आज्यम् । अथास्यै वारुण्यै पयस्यायै द्विरवद्यति । सोऽन्यतरेणावदानेन सह मेषमवदधाति । अथोपरिष्टादाज्यस्याभिघारयति, प्रत्यनक्त्यवदाने, अतिक्रामति । अतिक्रम्याश्राव्याह 'वरुणं यज' इति, वषट्कृते जुहोति ॥ २७ ॥

सव्ये पाणावध्वर्युः स्रुचौ कृत्वा दक्षिणेन प्रतिप्रस्थातुर्वांसोऽन्वारभ्याह–'मरुद्भ्योऽनुब्रूहि' इति । उपस्तृणीत आज्यं प्रतिप्रस्थाता । अथास्यै मारुत्यै पयस्यायै द्विरवद्यति । सोऽन्यतरेणावदानेन सह मेषीमवदधाति । अथोपरिष्टादाज्यस्याभिघारयति, प्रत्यनक्त्यवदाने अतिक्रामति । अथाध्वर्युरेवाश्राव्याह–'मरुतो यज' इति, वषट्कृते जुहोति ॥ २८ ॥

---

यश्च मेषी मारुत्या, तां मारुत्या स्थापयेत् । तदेतद् विपरिहरणमनूद्य स्तौति–तद्यदेवमिति । मेषो हि पुरुषस्य वीर्यरूपः, वरुणश्च क्षत्रियजातिः, तस्मिन् क्षत्रियजातौ निधानात् 'वीर्यमेव एतत् दध' । 'अर्वाग्' वीर्यं सामर्थ्यम्, तद्रहिता खलु 'स्त्री,' मरुतश्च वैश्यजातिः । मारुते हविषि स्त्रीपशोर्मेष्या निधानात् तां वैश्यजातिम् 'अर्वाग्' वीर्यरहितामेव कुरुत ॥ २६ ॥

विपरिहरणानन्तरं वारुण्या पयस्याया प्रचारं विधत्ते–अथाध्वर्युरिति । वरुणायानुब्रूहीति । होतारं प्रत्यनुवाक्यार्थं सम्प्रैषमुक्त्वा, जुह्वामुपस्तीर्य, 'अस्यै वारुण्यै' षष्ठ्यर्थे चतुर्थी, वारुण्याः पयस्यायाः 'द्विरवद्यति' । 'स' अवदानद्वयेषु 'अन्यतरेण' पूर्वेण उत्तरेण वा 'अवदानेन' 'सह' कृत्स्नं 'मेषं' स्रुचि 'अवदधाति' पुनरभिघार्य अवदानदेशे इति प्रयत्नेन कुर्यात् । स ततोऽतिक्रमणादीनि प्रकृतिवत् कुर्यादित्यर्थः ॥ २७ ॥

प्रतिप्रस्थातुर्मारुत्या पयस्यायाः प्रचरणे विशेषमाह–सव्ये पाणाविति । स्वकीये 'स्रुचौ' जुहूपभृतौ अध्वर्युः आत्मीये 'सव्ये पाणौ' कृत्वा, 'दक्षिणेन प्रतिप्रस्थातुः' 'वासोऽन्वारभ्य,' 'मरुद्भ्योऽनुब्रूहि'–इति होतारं प्रेष्य उपस्तरणादिकं प्रतिप्रस्थाता कुर्यात् । सोऽन्यतरेणेति । स प्रतिप्रस्थाता पूर्वेणोत्तरेण

---

१–उपस्तरणाभिघारणयोः सह ... का० श्रौ० सू० ५।१२।७। २–अन्यतरेणावदानेन सह मेषम्। का० श्रौ० सू० ५।११।२८।

( त्यु ) अथाध्वर्युरेव कायेन । ( नै ) एककपालेन पुरोडाशेन प्रचरति काये-नैककपालेन पुरोडाशेन प्रचर्याध्वर्युरेवाहाग्नये स्विष्टकृतेऽनुब्रूहीति स सर्व्वे-षामेव हविषामध्वर्युः सकृत्सकृदवद्यत्यथैतस्याऽएव पयस्यायै प्रति-प्रस्थाता सकृदवद्यत्यथोपरिष्टाद् द्विराज्यस्याभिघारयतस्ताऽउभावेवाति-क्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाहाग्निं स्विष्टकृतं यजेति ता ऽउभावेव वषट्कृते जुहुतः ॥ ३९ ॥

( तोऽ ) अथाध्वर्युरेव प्राशित्रमवद्यति । ( ती ) इडाᳬसमवदाय प्रति-प्रस्थात्रेऽतिप्रजिहीते तत्रापि प्रतिप्रस्थाता मारुत्यै पयस्यायै द्विरभ्यवद्य-त्यथोपरिष्टाद् द्विराज्यस्याभिघारयत्युपहूय मार्जयन्ते ॥ ४० ॥

---

अथाध्वर्युरेव कायेनैककपालेन पुरोडाशेन प्रचरति । कायेनैककपालेन पुरोडाशेन प्रचर्याध्वर्यु-रेवाह–' अग्नये स्विष्टकृतेऽनुब्रूहि ' इति । स सर्वेषामेव हविषामध्वर्युः सकृत्सकृदवद्यति । अथैतस्या एव पयस्यायै प्रतिप्रस्थाता सकृदवद्यति । अथोपरिष्टाद् द्विराज्यस्याभिघारयतः । ता उभावेवाति-क्रामतः । अतिक्रम्याश्राव्याध्वर्युरेवाह–'अग्निं स्विष्टकृतं यज' इति । ता उभावेव वषट्कृते जुहुतः॥३९

अथाध्वर्युरेव प्राशित्रमवद्यति । इडां समवदाय प्रतिप्रस्थात्रेऽतिप्रजिहीते । तत्रापि प्रतिप्रस्थाता मारुत्यै पयस्यायै द्विरभ्यवद्यति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति । उपहूय मार्जयन्ते ॥४०॥

---

वाऽवदानेन सह हस्ते मेषे स्रुचि अवदध्यात् । ततो मेषी वाऽन्या प्रत्यक्नेनेति । तत प्रतिप्रस्थाता वेदिमति-क्रामति । अनन्तरमध्वर्युरेव तदीय वामोऽन्वारभ्य " मरुतो यज " इति ब्रूयात् । होतायाज्यान्ते वषट्कृते सति केवल प्रतिप्रस्थाता दक्षिणे आहवनीये हविर्जुहोति, तमनु किञ्चिद् वाचाप्याहरेत् । एतत् सर्वं सङ्गृह्य कात्या-यनेन सूत्रितम्–" पयस्याप्रचरणकाले मेषौ व्यतिहरत , अन्यतरेणावदानेन सहमेषं, मक्षेन स्रुचौ गृहीत्वा प्रति-प्रस्थातुर्वासो दक्षिणेन मन्द्रयोऽनुसारयति, वाऽन्यो वा यजमान–इति ( का. श्रौ. सू. ५ ।१२७–१३० ) ॥३८॥

कायेन हविषा प्रचरण विधत्ते–अथेति । प्रधानयागानन्तरमनुद्देश स्विष्टकृद्विनियोगात सर्वमनुकामति–अध्वर्युरेवाहाग्नये स्विष्टकृत इत्यादिना । " अनुब्रूहि–" इति । स्विष्टकृद्यागस्य पुरोऽनुवाक्यावैरः । अनुष्ठित प्रधानयागे न्यूनातिरेकदोषपरिहारेण स्विष्ट होत्र यत्र करोतीति स्विष्टकृत् ॥

स सर्वेषामेवेति । आग्नेयादि–कार्यान्तानाम् । सकृत्सकृदिति । प्रत्येकमेकैकम् । द्विरवदानमनक्ति वारयति–एतस्या एवेति । ' एतस्याः ' मारुत्याः पयस्यायाः । ' एव ' हविष मकारात् स्विष्टकृदर्थं ' सकृत् ' एव अवद्येत्, नान्यस्मादित्येवकारार्थः । चतुरवदानसम्पत्तये अभिघारणं च द्विः द्विरित्येव–अथोपरिष्टादिति । 'द्विः' चैषाम्यत्रचिगणनेऽर्थे, "द्वित्रिचतुर्भ्यः सुच्" ( पा. सू. ५ । ४ । १८ )–इति द्विशब्दात् सुच् ॥३९॥

अथाध्वर्युरेव प्राशित्रमिति । प्रतिप्रस्थातु प्राशित्रावदान नास्तीत्येवकारार्थः । तत्र तस्याः पयस्याहविषः नाना चतुरवत्तिनीत्वात् प्रकृतौ मानाभावात् प्राशित्रावदानस्याभावेऽपि द्विरवदानं विधत्ते । इडा समवदायेति । सर्वेभ्यो

---

१-इदं चैतरेत अग्नेः स्विष्टकृत इति । का. श्रौ. सू. ५ । ३ । १ । २–काण्डे ३ अध्याये २० पृष्ठम् ।

ताऽउभावेव सादयित्वा स्रुचो व्यूहतः । स्रुचो व्युह्य परिधीन्त्समुज्य परिधिमभिपद्याश्राव्याध्वर्युरेवाहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति सूक्तवाकꣳ होता प्रतिपद्यतेऽथैता ऽउभावेव प्रस्तरꣳ समुल्लुम्पत ऽउभावनुप्रहरत उभौ तृणेऽअपगृह्योपासाते यदा होता सूक्तवाकमाह ॥ ४२ ॥

( ब्रा ) अथाग्नीदाहानुप्रहरेति । ता ऽउभावेवानुप्रहरत ऽउभावात्माना ऽउपस्पृशेते ॥ ४३ ॥

---

ता उभावेव सादयित्वा स्रुचो व्यूहतः । स्रुचो व्युह्य, परिधीन् समज्य परिधिमभिपद्य, आश्राव्याध्वर्युरेवाह—" इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय " इति । सूक्तवाकं होता प्रतिपद्यते । अथैता उभावेव प्रस्तरं समुल्लुम्पतः, उभावनुप्रहरतः, उभौ तृणे अपगृह्योपासाते—यदा होता सूक्तवाकमाह ॥ ४२ ॥

अथाग्नीदाह 'अनुप्रहर' इति । ता उभावेवानुप्रहरतः, उभावात्माना उपस्पृशेते ॥ ४३ ॥

---

नुयाजप्रैष । यजयजेत्यादिसर्वत्र "नित्यवीप्सयो" इति ( पा० सू० ८।१।४ ) यजेत्यस्य द्विर्वचनम् । जौहवेन पृषदाज्येन त्रिरिष्ट्वा चतुर्थे चतुर्थे अनुयाजे औपभृतम् 'समानयमानौ' उभावपि अध्वर्युप्रतिप्रस्थातारौ ' नवभिः अनुयाजै. ' ' चरतः ' प्रचरत इत्यर्थ. । उभयापेक्षया ' चतुर्थे—चतुर्थे ' इति वीप्सा । प्रयाजानुयाजानां तत्सङ्ख्याकत्वं सम्भूय प्रशंसति—नवेत्यादिना । प्रधानयागात्प्रथममिज्यन्त इति प्रयाजा', अनु पश्चादिज्यन्त इत्यनुयाजाः । कर्मणि घञ्, तावेतौ " प्रयाजानुयाजौ यज्ञाङ्गे " इति ( पा. सू. ७ । ३ । ६२ ) निपातनात् कुत्वाभावः । नव प्रयाजा अनुयाजाश्च यस्मिन् इत्युभयत्र बहुव्रीहिः, शिष्टमुक्तार्थम् ॥ ४१ ॥

अनुयाजानन्तरभावि स्रुग्व्यूहनादिकमपि चोदकप्राप्तमुभाभ्यां कर्त्तव्यमित्यनुक्रामति—ता उभावेवेत्यादिना । परिधिमभिपद्येति । मध्यमं परिधिमन्वारभ्येत्यर्थः । उक्तं हि कात्यायनेन—"प्रथमं परिधिं गृहीत्वाऽऽश्राव्याहेषिता दैव्या इति ( का. श्रौ सू. ३ । १२१ ) " इषिता दैव्या " ( श. प. १।८।३।१० भा. ) इति सूक्तवाकप्रैषः प्रकृतावेव व्याख्यात. । समुल्लुम्पत इति । "लुम्प छेदने" ( धा. पा.तु. उ. १६१ ) समुच्छिन्त. समुद्गृह्णीत इति यावत् । उभावनु प्रहरत इति । सूक्तवाकेऽनूच्यमाने 'उभौ' अध्वर्युप्रतिप्रस्थातारौ ' अनुप्रहरतः ' स्वं स्वं प्रस्तरमग्नौ प्रक्षिपत इत्यर्थः । यदा होतेति । ' यदा ' खलु होता सूक्तवाकं परिसमापयति ॥ ४२ ॥

' अथ ' अनन्तरम् ' अग्नीत् ' आग्नीध्रः ' अनुप्रहर '—' इति ' अध्वर्युं प्रति ' आह ' उभावेवेति । यद्यप्यनुप्रहरेत्येकवचनेनाध्वर्युरेव प्रेर्यते तथापि कृतानुकरत्वात् प्रतिप्रस्थातुरपि युगपदनुप्रहरणं विधत्ते इत्यर्थः । आत्मानां उपस्पृशेते इति । "चक्षुष्पा" ( वा. सं २ । १६ ) इति मन्त्रेण । तथा च सूत्रितम्—"चक्षुष्पा इत्यात्मानमालभते " इति ( का. श्रौ. सू. ३ । १२३ ) ॥ ४३ ॥

---

१—स्रुचो व्यूहत्यध्वर्युः । का. श्रौ. सू. ५ । १२४. अध्वर्युग्रहणं वचनमध्युदसार्थम् । तस्य हि व्यूहन प्रकृतौ वैकल्पिकं विहितमस्ते । २—" स्रुचाऽनुकरोत्यत्र दक्षिणस्याम् " इति ( का. श्रौ. सू ५ । १११ ) श. प. भा. २ । ५ । २ । २४ । क. भाष्ये च द्रष्टव्यम् । ३—' अहमनुपस्पृशेते ' इति क. ।

( ते अ ) अथाह संवदस्वेति । ( त्य ) अगानग्नीदगन्नग्निः श्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीत्यध्वर्युरेवैतदाह ता उभावेव परिधीननुप्रहरत उभौ स्रुचः सम्प्रगृह्य स्फ्ये सादयतः ॥ ४४॥

( त्रा ) अथाध्वर्युरेव प्रतिपरेत्य । पत्नीः संयाजयत्युपास्त एव प्रतिप्रस्थाता पत्नीः संयाज्योदेत्यध्वर्युः ॥ ४५ ॥

( स्त्री ) त्रीणि समिष्टयजूꣳषि जुहोति । तूष्णीमेव प्रतिप्रस्थाता स्रुचं प्रगृह्णाति तद्य वैश्वदेवेन यजमानयोर्वाससी परिहिते स्यातां त एवात्रापि स्यातामथास्यै वारुण्यै पयस्यायै क्षामकर्पमिथुमादायावभृथं यन्ति वारुण्यं वा एतन्निर्वरुणतायै तत्र न साम गीयते न ह्यत्र साम्ना किंचन क्रियते तूष्णीमेवेत्याभ्यवेत्योपमारयति ॥ ४६ ॥

---

अथाह—'संवदस्व' इति । अगानग्नीद्—अगन्, श्रावय श्रौषट्, "स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि"—इति अध्वर्युरेवैतदाह । ता उभावेव परिधीननुप्रहरतः, उभौ स्रुचः सम्प्रगृह्य स्फ्ये सादयतः ॥ ४४ ॥

अथाध्वर्युरेव प्रतिपरेत्य पत्नीः संयाजयति । उपास्त एव प्रतिप्रस्थाता । पत्नीः संयाज्योदेत्यध्वर्युः ॥ ४५ ॥

त्रीणि समिष्टयजूंषि जुहोति । तूष्णीमेव प्रतिप्रस्थाता स्रुचं प्रगृह्णाति । तद् ये वैश्वदेवेन यजमानयोर्वाससी परिहिते स्याताम्—ते एवात्रापि स्याताम् । अथास्यै वारुण्यै पयस्यायै क्षामकर्पमिथुमादायावभृथं यन्ति वारुण्यं वा एतत्—निर्वरुणतायै । तत्र न साम गीयते, नह्यत्र साम्ना किंचन क्रियते । तूष्णीमेवेत्याभ्यवेत्योपमारयति ॥ ४६ ॥

---

संवदस्वागानग्नीदिति शाखान्तरप्रसिद्धप्रैषस्य यदस्ति तदध्याग्नीध्रस्य अध्वर्युणोक्तत्वं व्यतिरिक्तमाह—अथाहेति । 'अथ' अनन्तरं "संवदस्व" 'इत्याह' आग्नीध्र । तत्र संवदनमुक्तिप्रयुक्तिरूपमनुक्रामति—अगानिति । ते च मन्त्राः प्रहरणे व्याख्याताः । तेषु च विभाग सूत्रकृता दर्शितः—(श.प. १।८।३।२०।भा.) एतेषां "संवदस्वगानग्नीदगन्नग्निः श्रावय श्रौषट्" (का. श्रौ. सू. ३।१२४)। इति "स्वगा दैव्या" इति शंयुवाकप्रैषमध्वर्युरेव कुर्यात् । परिधिप्रहरणादिकं तूभाभ्यामेवानुष्ठेयम् । उभौ स्रुच इत्यादि । 'सम्प्रगृह्य' सम्यग् गृहीत्वा विमोचनार्थं स्फ्ये 'सादयतः' ॥ ४४ ॥

अथाध्वर्युरेवेति । प्रतिपरेत्येति । आहवनीयदेशात् प्रतिनिवृत्य गार्हपत्यसमीपं गत्वेत्यर्थः । उपास्त इति । पत्नीसंयाजानन्तरं तूष्णीमुपविशेत् प्रतिप्रस्थाता, न तु तस्य तदानीं कृत्यानुकरणमपेक्षितमित्यर्थः । पत्नीः संयाज्योदेत्य उदङ्गुदेति । पत्नीसंयाजानन्तरमाहवनीयदेशं गत्वेत्यर्थः ॥ ४५ ॥

त्रीणि समिष्टयजूंषीति । तानि च पूर्वस्मिन् वैश्वदेवब्राह्मणे व्याख्यातानि (श.प. २।५।१।२१ भा.) तूष्णीमेवेति । तस्मिन्नपि समिष्टयजुर्होमसमये आग्नीध्रः स्रुच तूष्णीमेव दक्षिणाग्नौ प्रगृह्णीयात् स्रुगासमाप्तं धारयेत् ।

( त्य ) अवभृथ निचुम्पुण । निचेरुरसि निचुम्पुणः । अव देवैर्देवकृत-मेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहीति काम१ँ हैते यस्मै कामयेत तस्मै दद्यान्न हि दीक्षितवसने भवतः स यथाऽहिस्त्वचो निर्मुच्येतैव१ँ सर्वस्मात्पाप्मनो निर्मुच्यते ॥ ४७ ॥

---

" अवभृथ ! निचुम्पुण, निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयासिष-मव मर्त्यैर्मर्त्यकृतम् । पुरुराव्णो देव रिषस्पाहि "–( वा. ३, ४८ ) इति। यथनं हैते यस्मै कामयेत तस्मै दद्यात् । न हि दीक्षितवसने भवतः । स यथाऽहिस्त्वचो निर्मुच्येतैवं सर्वस्मात् पाप्मनो निर्मुच्यते ॥ ४७ ॥

( १८५ ) अथ केशश्मश्रू वप्त्वा । समारोह्याग्नी उदवसायैव ह्येतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजत उत्सन्नयज्ञ इव वा एष यच्चातुर्मास्यान्यथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति तस्मादुदवस्यति ॥ ४८ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥३॥३॥(८।२)॥

---

अथ केशश्मश्रू वप्त्वा समारोह्याग्नी उदवसायैव ह्येतेन यजते । न हि तदवकल्पते—यदुत्तरवेदावग्निहोत्रं जुहुयात् । तस्मादुदवस्यति, गृहानित्वा, निर्मथ्याग्नी पौर्णमासेन यजते । उत्सन्नयज्ञ इव वा एषः—यच्चातुर्मास्यानि । अथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत् पौर्णमासम् । तत् क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति—तस्मादुदवस्यति ॥ ४८ ॥ इति वरुणप्रघासयागश्चातुर्मास्ये द्वितीयं पर्व ॥

---

अस्तु प्रक्षिपामीत्यर्थः । "वा प्रापणे"—(धा. पा. अ प ६९) इत्यस्माल्लुङि "यमरमनमातान्"—(पा सू. ७।२।७३) इति सगिटौ । तथा मर्त्यै मनुष्ये अन्तिकेन 'मर्त्यकृतं' मनुष्यविषयं यत् एन-नैन, यदपि 'अवाप्ताऽभिकम्' ह 'देव' स्वामिन् ! अवभृथ ! 'पुरुत्रा' पुरुत्राऽकृतालात् बहुविधापेक्षा-कारणात् । वीरगौरादिप्रतिनिगम्यय—(उ २ पा २४१ सू.) । यथा, "दा दाने"—(धा. पा अ. प. १७) इत्यस्मात् "आतो मनिन्—क्वनिप्—वनिपश्च"—(पा. सू. ३।२।७४) इति क्वनिप् । पुरु बहुल समादु च यानि ददानीति पुरुत्रा, तस्मात् इन्द्रियहिंसकात् वरुणपाशापहन्ध्यगात् पापात् अस्मान् पाहीति । एवमनेन मन्त्रेण क्षामवत्यग्नि हवि होम आचरणी तु न । तदुक्तं सूत्रकारेण—" अपायानी कालोऽभ्यन्तरावन्योन्यिम्य पृष्ठे धावन "—(का श्रौ सू. ५।५।२१—(२४)) इति । पूर्वयोर्वाससोर्दान विधेच-कार्यमिति । स्नानानन्तरमन्य वाससी परिधाय । पूर्वपरत्वान निषिद्धम्, "न दीक्षितवसन परिदधीत"—इति श्रुतेः । एवमेन प्रशंसति—स यथेति । 'यथा' खलु 'अहिस्त्वचो निर्मुच्येत,' 'एवम्' पूर्वपरिहितवासो दत्त्वा सर्वस्मात् पापादेव यजमानो निर्मुच्यते ॥ ४७ ॥

अवभृथस्नानानन्तरं केशश्मश्रुवपनं विधत्ते—अथेति । केशाश्च श्मश्रूणि च 'केशश्मश्रु' प्राण्यङ्गत्वादेक-वद्भाव । 'वप्त्वा' वापयित्वेत्यर्थः । समारोहणानन्तरं गृहे प्रत्यागमनं विधत्ते—समारोह्येति । 'अग्नी' गार्हपत्याहवनीयौ । एतेन यजत इति । वरुणप्रघासाख्येन यागेनेत्यर्थः । न हि तदिति । वरुणप्रघासनिमि-त्तायामुत्तरवेद्यां 'यत्' अग्निहोत्रहवनम्, न तत् युक्तम् इत्यर्थः । यस्मादेव तस्मात् कारणाद् वरुणप्रघासेभ्यो-दवसानं कर्तव्यमिति निगमयति—तस्मादिति । समारोहणानन्तरं तस्मात् स्थानान्निष्क्रम्य 'गृहान्' 'इत्वा' गत्वा, 'निर्मथ्य' तत्र 'पौर्णमासेन' यागेन 'यजेत' । एतद्प्रशंसाहेतुना स्तौति—उत्सन्नयज्ञ इत्यादिना ।

---

१—पूर्वं दक्षदक्षिणेभ्यो वस्त्रा इत्येव का श्रौ सू ५।१५०। वा गेहजन्य वरुणस्य इत्यर्थः । २—अन्ये वाससी परिदध्यात् । का श्रौ सू ५।१४२। द्विवस्त्रम् अवभृथा । ३—सर्वसम्बन्धा श्वेत वा प्रवास्य । का श्रौ सू ५।१६८ । ४—एतेषु पौर्णमास समारुह्यान्निर्मथ्यानेष्टया वेद् । का श्रौ सू ५। ४४।

